THE

HARIDAS SANSKRIT SERIES

66





THE

# DHVANYĀLOKA

OF

ĀNANDAVARDHANĀCHĀRYA

*Edited*

## WITH THE DĪDHITI COMMENTARY

INTRODUCTION, INDEX ETC.,

By

*Kavis'ekhara Pandit Badari Nāth S'armā*

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Choukhambâ Sanskrit Series Office.*

Benares City.

1937

* श्रीः *

हरिदास-संस्कृत-ग्रन्थमाला

६६



श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः ।

मुजफ्फरपुरराजकीयसंस्कृतमहाविद्यालयसाहित्यप्रधानाध्यापकेन

मैथिलश्रोत्रियकविशेखरपण्डितश्रीबदरीनाथशर्मणा

निर्मितया 'दीधिति' विवृत्या विभूषितः ।



प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरीज़ आफिस,

बनारस सिटी ।



१९९४

# भूमिका ।

अये सुधीसहृदयधौरेयाः साहित्याम्भोधिनिष्णाताः !

कीर्तिचतुर्वर्गादिप्रयोजकस्य सहृदयहृदयाह्लादिनः शब्दार्थमयस्य (१)काव्यस्य कायस्य जीवितमिव सारभूतं व्यक्तिमात्रावलम्बेन गुणीकृताभ्यां शब्दार्थाभ्यां मध्यमानादेन शाब्दिकाङ्गीकृतं स्फोटमिव स्फुटीक्रियमाणं वस्त्वलङ्काररसादिरूपतया त्रिशाखमपि रसादिप्रधानं ध्वनिमभाववादेन, भाक्तत्वोपन्यासेन, ब्रह्मतत्त्ववदनिर्वचनीयताऽऽख्यानेन, समासोक्त्याद्यर्थालङ्कारान्तर्भावनेन, गुणवत्संघटनाऽऽत्मकरीतिलक्षणताऽङ्गीकारेण, वक्रोक्त्यन्तःपातनेन, परामर्शप्रभवसंविद्विषयत्वव्यवस्थापनेन च विविधाभिर्भङ्गिभिः खण्डयतां प्रतिपक्षिप्राचीनविपश्चितां मतं ध्वनिस्थापनयाऽपाचिकीर्षुः सुगृहीतनामधेयो राजानकानन्दवर्धनाचार्यः साहित्याध्वन्यालोकमादधानं 'ध्वन्यालोक'समभिधानं ध्वनिग्रन्थमिमं प्रथमं प्राणैषीत् ।

इह च प्रथमोद्द्योते—ध्वनिस्वरूपनिरूपणं प्रतिज्ञाय तदभाव–भाक्तत्वानिर्वाच्यत्ववादिनां मतं निराकृतम्, ध्वनिं लक्षयित्वा समासोक्त्याद्यलङ्कारानन्तर्भावश्च दर्शितः । द्वितीयोद्द्योते—व्यङ्ग्यमुखेन ध्वनेः प्रभेदानां लक्षणोदाहरणानि प्रकाशयता रसादिध्वनि–रसवदाद्यलङ्काराणां मिथोवैलक्षण्यं परिपन्थिस्मयमन्थनपूर्वकं व्यवस्थाप्य गुणा निरूपिताः । तृतीयोद्द्योते—पुनर्व्यञ्जकमुखेन ध्वनेः प्रकारान् सपरिकरं निरूपयता रीतीर्वृत्तींश्च प्रदर्श्य भाट्ट–प्राभाकर–तार्किक–वेदान्ति–बौद्धादिनयेष्वपि व्यक्तिः स्थापिता । तुरीयोद्द्योते च—ध्वनिसम्बन्धेन प्रागुक्तानामप्यर्थानामपूर्वत्वं निदर्श्य, कविप्रतिभाऽऽनन्त्यं ध्वनिप्रयोजनान्तरं प्रकटयता शान्तादिरसानां भारतादिप्रबन्धव्यङ्ग्यतां व्यवस्थापयता सप्रबन्धनामनिर्देशमुपसंहारो विहितः ।

अत्र हि ध्वनिशब्देन बहुत्र गुणीभूतशब्दार्थनिष्ठव्यक्तिप्रयोज्यबोधविषयप्रधानीभूतार्थस्य, कुत्रापि तदर्थव्यञ्जनक्षमशब्दार्थयोः, क्वचित् तादृशार्थबोधनव्यापारस्य च परामर्शः । भक्तिपदेन शुद्धगौणलक्षणयोः, लक्षणापदेन तु गौणलक्षणामा-

---

(१) एतन्मदीयसाहित्यसारिण्यां स्फुटम् ।

त्रस्य प्रतीतिः । शब्दशक्त्युद्भवध्वनेरलङ्कारमात्ररूपतयैकविधत्वमेव । शब्दार्थोभयशक्त्युद्भवध्वनिरप्युपपत्त्यैवोहनीयः । काव्यस्य मुख्यतया ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्वावेव प्रकारौ, चित्रं तु गौणः प्रभेदः । सर्वापेक्षया ध्वनेः प्राधान्यम्, तत्रापि विशेषेण रसादिलक्षणस्य । लेखशैली च पातञ्जलमहाभाष्यादिवत् पुनः पुनरुपात्तविषयोपपादिका नितरामुत्तानप्रायाभिप्रायाऽपि गभीराशया प्रबन्धप्राचीनतरत्वं द्योतयति । ध्वनेः सर्वतः प्रथमं लक्षणस्य प्रवर्तकत्वाद् ग्रन्थकृदयं ध्वनिकारसञ्ज्ञासम्मानस्य भूमिः । लक्ष्यन्तु महर्षिवाल्मीकि–द्वैपायनादिभिरेव प्रसेधितम् । अत एव 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इतिकारिकायां निगमप्ररूढानादिपारम्परिकप्रसिद्धेः सूचयिता समाम्नातशब्द उपक्रम एव प्रयुक्तः ।

ग्रन्थोऽयं कारिकारूपो ध्वनिनामा, परिकरश्लोक–सङ्ग्रहश्लोक–सङ्क्षेपश्लोकघटित–वृत्तिरूपश्चालोकनामेतिभागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेतिसंज्ञात्रयभाक् च । तत्र कारिकाग्रन्थस्याद्यमङ्गलराहित्येन, कारिकावृत्त्योः प्रतिपाद्यविषयैक्येन, ध्वनिग्रन्थकृन्नाम्नः पृथगनुपलम्भेन जल्हणगुम्फितायां सूक्तिमुक्तावलौ—

'ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ? ॥' इति राजशेखरीयपद्यस्य दर्शनाद्, व्यक्तिविवेके महिमभट्टेनोभयो(१)रविभागेनैव खण्डनात्, सूरिकल्हण–हेमेन्द्र–क्षेमेन्द्र–जयरथ–विश्वनाथ–गोविन्द–कुमारस्वामिप्रभृतिनिबन्धृमतानुकूल्यात्, समुद्रबन्धस्य कार्व्यपञ्चकोपपादितसिद्धान्ताच्च कारिकावृत्तिग्रन्थयोः प्रणेताऽऽनन्दवर्धन एवैक इति पौरस्त्या विपश्चितो निश्चिन्वन्ति ।

'जैकोवी'प्रभृतयः पाश्चात्त्यास्तु 'अत एव मूलकारिका तन्निराकरणार्थो न श्रूयते, वृत्तिकृत्तु निराकृतमपि प्रमेयसङ्ख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति ।' इति ( निर्णयसागरे पूर्वं मुद्रितस्य लोचनस्य ५९ पृष्ठे ) 'तेनात्र प्रथमोद्द्योते ध्वनेः

( १ ) कारिकावृत्त्योः ।

सामान्यलक्षणमेव कारिकाकारेण कृतम्, द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत्।' इति (५९ पृष्ठे) 'न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—' इति (६० पृष्ठे) 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः।' इति (६० पृष्ठे) 'एतत् तावत् त्रिभेदत्वं न कारिकाकारेण कृतम्, वृत्तिकारेण तु दर्शितम्।' (इति १२३ पृष्ठे) च लोचनस्य दर्शनान्मम्मटादिस्वरसानुसन्धानाच्च कारिकावृत्तिकर्त्रोर्भेदं प्रतिपादयन्ति।

एवं सति यदा कारिकावृत्तिकृतोर्भेदः, तदा कारिकाकारो ध्वनिकारातिरिक्तनाम्ना सर्वैरपरिचित एव। अत एव तदीयः समयोऽपि विशेषेण निर्धारयितुमशक्यः। सामान्यतस्तु दण्डिभामहोद्भटादिभ्यः सप्तमादिशताब्दयुद्भूतेभ्योऽर्वाचीनः नवमशताब्दीसमुत्पन्न–वृत्तिकृतश्च प्राचीनो ध्वनिकार इत्युच्यते। वृत्तिकारस्य परिचयस्त्वनुपदं वितीर्यते। यत्तु दाक्षिणात्यः शोभनकविः सहृदयमेव ध्वनिकारमुररीचकार, तन्न, 'सहृदयमनःप्रीतये' इत्यादिकारिकाघटकसहृदयशब्दस्य तदाख्यानबीजभूतस्य विदग्धपरताया एव सकलसुधीसम्मतत्वात्।

अभेदे तु राजानकोपाधिरानन्दवर्धनाचार्यः काश्मीरिक–भूसुरवंशावतंसस्य भट्टनोणस्य (१)तनयः ख्रिष्टनवमशताब्द्या उत्तरार्धे(२) तन्त्रसाहित्यरत्नखनिं कश्मीरावनिं शासतोऽवन्तिवर्मनृपतेः सभापण्डित आसीदिति राजतरङ्गिणीतो जैकोवी–बुह्लराभ्यां निर्धारितम्। तदेव काव्यप्रकाशव्याख्यातुर्वामनाचार्यस्यापि सम्मतम्। 'यस्मिन्नस्ति न वस्तु किञ्चन' इत्यादिध्वनिखण्डनपरवृत्तिघटकपद्यस्य प्रणेता मनोरथनामा कविरप्यानन्दवर्धनस्य समानकालिक एवेति तत्रत्यलोचनान्मतिगोचरीभवति। आलङ्कारिकशिरोमणिरयं निखिलेषु दर्शनेषु परमां प्रौढिं बिभ्राणोऽपि व्याकरणे निरतिशयं पक्षपातमवाक्षीदित्यपि तत्तन्मतनिराकृतिपरसन्दर्भेभ्यः(३) 'प्रथ-

---

(१) क्वचित्तु 'जोन' इति तन्नाम। (२) ख्रैष्ट ८५५ तः ८८४ वर्षं यावत्।
(३) व्यञ्जनास्थापनप्रसङ्गे।

मे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्' इति(१) वृत्तिग्रन्था-च्चावसातुं न दुश्शकम् ।

आनन्दवर्धनाचार्यविरचितप्रबन्धेषु ध्वन्यालोकः, देवीशतकम्, विषमबाण-लीला ( प्राकृतभाषामयी ), अर्जुनचरितम्, धर्मोत्तमानाम्न्या विनिश्चयटीकाया विवृतिः, इतिपञ्चानां नामान्याकर्ण्यन्ते । तेषु ध्वन्यालोक–देवीशतके काव्यमालायां मुद्रिते, विषमबाणलीलाऽर्जुनचरिते क्वचित् क्वचिद् ध्वन्यालोक एवोद्धृतनामनी, धर्मोत्तमाविवृतिस्तु तृतीयोद्द्योतान्त(२)वृत्तिगम्या तल्लोचनेन स्फुटीकृता ।

किञ्च ध्वन्यालोके—'अर्जुनचरितम्' 'कादम्बरी' 'कुमारसम्भवम्' 'तापसव-त्सराजम्' 'नागानन्दम्' 'भारतम्' 'मधुमथनविजयम्' 'रत्नावली' 'रामाभ्युदयम्' 'रामायणम्' 'विषमबाणलीला' 'वेणीसंहारम्' 'सेतुबन्धम्'(३) 'हरिविजयम्'(४) 'हर्षचरितम्' इत्येतेषां प्रत्नानां ग्रन्थरत्नानाम्, 'अमरुकः' 'आदिकविबाल्मीकिः' 'उद्भटः' 'कालिदासः' 'धर्मकीर्तिः' 'बाणः' 'भरतः' 'भामहः' 'व्यासः' 'सर्वसेनः' इत्यमीषां प्रबन्धॄणां च नामान्युपलभ्यन्ते । तत्र भट्टभामहः खैष्टाष्टमशताब्द्यां कश्मीरावनिमण्डलं मण्डयामास । एतदीयदेवीशतकव्याख्याऽन्ते महाभाष्यप्रदी-पकृत्कैयटश्च ग्रन्थसमाप्तिसमयं ९७७ तमं खैष्टाब्दमाख्यत् । ध्वन्यालोकलोचन-कारोऽभिनवगुप्तोऽपि स्वरचित 'प्रत्यभिज्ञाविमर्षिणी' समाप्तौ—

'इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे,
तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।' इत्यादिपद्यं निगद्य खैष्टदशम-

शताब्द्यवसानं स्वसमयमुल्लिलेख। दशमशताब्दीसमुद्भूतो राजशेखर एकादशशता-ब्दीसमुद्भूतो हेमेन्द्रः क्षेमेन्द्रश्च स्वस्वप्रबन्धेषु सश्लाघं राजानकानन्दवर्धनं प्रामाणि-कत्वेन स्वीचकार। एतावताऽप्यानन्दवर्धनस्य नवमशताब्दी स्थितिकाल इति निश्चेतुं शक्यम् ।

---

(१) ध्वनिलक्षणप्रकरणे ।
(२) 'यत्त्वनिर्देश्यत्वम्' इत्यादिना ।
(३) प्राकृतमहाकाव्यम् ।
(४) सर्वसेनकृतम् ।

यत्तु भरतसूत्रटीकायाम् 'अस्मद्गुरवः' इत्यभिनवगुप्तस्यानन्दवर्धनोल्लेखिलेखमवलोक्य समसामयिकत्वमुभयोः पिशेल्महाशयेन संशयितम् ; तन्न, गुरुत्वस्य परम्परया कालभेदेऽपि सारस्वतमहत्त्वख्यापनाय वक्तुं शक्यत्वात्, उभयोः समानकालिकत्व एकतरसम्बन्धिग्रन्थस्यापरेण सश्रद्धं व्याख्यातुमनौचित्याच्च ।

ध्वन्यालोकस्य चन्द्रिका लोचनं चेतिटीकाद्वयं श्रूयते । तत्र चन्द्रिका नेदानीमुपलभ्यते, किन्तु—

'किं लोचनं विनाऽऽलोको भाति चन्द्रिकयाऽपि हि ।

तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥' इति तृतीयोद्द्योतान्तलोचनश्लोकात्, 'यस्तु व्याचष्टे' इत्युपष्टभ्य 'इत्यलं निजपूर्वजसगोत्रैः(१) साकं विवादेन ।' इतितृतीयोद्द्योतस्यारम्भे, 'चन्द्रिकाकारस्तु पठितमनुपठतीतिन्यायेन गजनिमीलिकया व्याचचक्षे' इत्युपक्रम्य 'इत्यलं पूर्ववंश्यैः सह विवादेन बहुना ।' इति ( १८५ पृष्ठे ) तन्मध्ये लोचनलेखाच्च केवलमुन्नीयते ।

लोचनन्तु खैष्टदशमशताब्द्यवसाने कश्मीराख्यजनपदनिवासिना भट्टतौतादि(२) गुरुत्रयीशिक्षितेन वराहगुप्तस्य पौत्रेण चुखलस्य तनुजन्मना मनोरथ(३)गुप्तस्याग्रजेन कर्मक्षेमराजादिगुरुणा महामाहेश्वराचार्याभिनवगुप्तेन विरचितं तृतीयोद्द्योतान्तं(४) मोहमयीनगरे निर्णयसागरमुद्रणागारे मुद्रितञ्च ।

अथास्य ध्वन्यालोकस्य प्रथममुद्रणावसरे परिशुद्धादर्शपुस्तकानुपलब्धेस्त्रुटीरशुद्धीश्च पठन-पाठनपरायणानामरुन्तुदा नितरामाकलय्य लोचनं च प्राचीनतमक्रमनिबद्धतयाऽऽधुनिकधीगोचरतामनासादयदवधार्य कतिपयैः सुहृद्भिरन्तेवासिभिश्च समुत्साह्यमानः कामपि सरलां विवृतिं नूतनया भङ्ग्या विरचयितुं चिराद् विचा-

(१) चन्द्रिकाकारोऽभिनवगुप्तस्य पूर्ववंश्य इत्यप्यतो ज्ञायते ।

(२) आदिपदेन लक्ष्मणगुप्त–भट्टेन्दुराजयोः सङ्ग्रहः ।

(३) आनन्दवर्धनसमकालिकमनोरथकवेरयं भिन्नः, कालभेदात् ।

(४) तच्चतुर्थोद्द्योतस्तु 'कलकत्तायूनिवर्सीटीजर्नल'पत्रादुपलब्धः ।

रयन् १९२८ खैष्टाब्दे साहायकसामग्रीविरहेऽपि कथञ्चन दीधितिसमभिधानां विवृतिमेतां सामि विरचय्य राजकीय–विहारोत्कलसंस्कृतसमितेः शास्त्रविचारपरिषदे निबन्धपरीक्षाप्रसङ्गेन समर्प्य प्रधानं पारितोषिकं चावाप्य किञ्चित्सफलप्रयत्नम्मन्यो दीधितिं पूरयितुमुदयंसिषम् , श्री १०८ राधागोविन्दानुग्रहेणैषमः पूर्णामकार्षं च ।

यद्यपीह लोचनप्रतिपादितानेव पदार्थान् प्रायेणोपादाम् , क्वचित्तु सन्दर्भशुद्ध्यनुरोधात् सिद्धान्ताभिनवीभावात् , तदनुपलम्भाच्च नूतनां पद्धतिमाशिश्रियम् , तथाऽपि भूयांसि स्खलितानि संशयानो महाशयांस्तान्यपोहितुमूहकुशलान् सङ्ख्यावतो विदग्धमूर्धन्यानभ्यर्थये ।

एतत्सम्बन्धे विहारोत्कलसंस्कृतसमितेर्भूतपूर्वकार्यसम्पादकानां सारस्वतमहामहिम्नां स्वर्गातिथीनां सुरेन्द्रनाथ ( मजुमदार, एम्.ए,पी.आर.एस. ) शास्त्रिणां, मान्यवराणां तेजनारायण ( जुब्ली ) महाकलाशालाप्रधानाध्यक्षाणां (डाक्टर) श्री हरिचन्द्र ( आइ. ई. एस्. ) शास्त्रिणां, समृद्धश्रद्धासम्मानभाजनानां महामहोपाध्यायानां कर्मकाण्डप्रधानाचार्यपण्डितश्रीमुकुन्द (झा, बख्शी) शर्मणां च प्रोत्साहनजन्यमुपकारमपारं प्रत्युपकर्तुमसमर्थः परमाचेतनं स्मरिष्यामि । अन्तेवासिषु चायुष्मतः साहित्याचार्यस्य श्रीवेचनशर्मणः, श्रीदरवारिशर्मणः, साहित्यशास्त्रिणः, श्रीश्यामानन्दशर्मणश्च पूर्वपत्रसंशोधनादिसाहाय्योपकृतिमविस्मरँस्तानाशिखं शुभाशिषां राशिना योजयामि ।

स चायं दीधितिविवृतिविशदीकृतो मुद्रणाय वितीर्णसर्वाधिकारो ध्वन्यालोकः सर्वविधसंस्कृतपुस्तकमुद्रणानवरतप्रबद्धपरिकरेण वाराणसेयचौखम्बासंस्कृतपुस्तकालयाधिपतिना श्रेष्ठिश्रीजयकृष्णदासगुप्तेन स्वकीये विद्याविलासनाम्नि मुद्रणालये सम्मुद्र्य प्रकाशित इति तदीयेनाप्युपकारभरेण प्रेर्यमाणस्तस्मै शतमाशिषो वितरामीति—

कौमुदीमहोत्सवः<br>२—११—३७

विनीतो निवेदयते—<br>**श्रीबदरीनाथः ।**

* श्रीः *

॥ श्रीकृष्णःशरणम् ॥

# अथ ध्वन्यालोकस्य विषयानुक्रमणिका ।

## प्रथमोद्द्योते–

## तृतीयोद्द्योते—

## चतुर्थोद्द्योते—

**इति सदीधितिध्वन्यालोकस्य विषयानुक्रमणिका।**

# काव्यप्रकाशः नागेश्वरीव्याख्यासहितः ।

अयि ! साहित्यतत्त्वमधिजिगमिषवो विपश्चितः !

इदं नाविदितचरं भवतां, यद्—विना मम्मटाचार्यप्राप्तप्रकाशं काव्यप्रकाशं; काव्यप्रकाशं लब्धुं न प्रभवः केऽपि कदा चिदपीति, किंचात एव सर्वत्रत्यासूत्तमासु परीक्षासु तत्तत्प्रबन्धकमहोदयैः पाठयत्वेन निर्धारितः स साहित्यमूर्धन्यो ग्रन्थः । परन्तु सम्प्रति परीक्षाऽर्थिनां विद्याऽर्थिनां कृते स्वल्पसमयेनैव झटिति संक्षेपतो ग्रन्थाशयग्रन्थिविमोचने प्रभुतरा व्याख्या काऽपि न दृग्गोचरीभूयत इतिचिन्ताऽऽकुलितमानसेभ्यो जनेभ्यः सहर्षं "नागेश्वरी" टीकया संवलितमुक्तग्रन्थं श्रीपण्डितहरिशङ्करशर्ममैथिलमहोदयो दृक्पथमवातारयत्, नूनमनेनोक्तचरव्याख्योपेतेन ग्रन्थेन भविष्यति स्वयमेवाध्येतॄणामध्यापकेन विनाऽपि परीक्षोपयोगिज्ञानमित्यत्र विदुषामनुभव इति वेदितव्यं तत्र भवद्भिः सादरमुक्त ग्रन्थं दिदृक्षुभिरिति । मूल्यम्—रू० ४)

# काव्यप्रकाशः सुधासागराख्यया व्याख्यया विभूषितः

अयि ! काव्यप्रकाशं सविशेषमधिजिगांसवो विपश्चिदपश्चिमा अन्तेवासिनः सुहृज्जनाश्च !

हन्त ! महदानन्दास्पदमिदमिदानीं प्रस्तूयते; श्रोतुमपि तन्मुहुर्मुहुरनुरुध्यन्ते कयत्कालमवधाय भवन्तः,

संप्रत्यसाम्प्रतं न भविष्यतीति; वर्त्तमानास्वपि विविधासु व्याख्यासु श्रीवाग्देवताऽवतारपदलाञ्छनेन श्रीमम्मटाचार्येण प्रणीतेऽधिकाव्यप्रकाशं; श्रीभीमसेनदीक्षितमहोदयेन व्याख्यातिलकं सुधासागराख्यं तिलकमिव समुद्भासितमिति सविशेषं विशेषं विद्वद्भिर्विद्वद्भिः प्रकाशनायानुशास्यमानेन मया तद्द्रष्टृवशंवदतया प्रकाशितः ।

आशास्यते चात्रत्यवैशिष्ट्यं विशिष्टपण्डितसंमतस्य वैमत्ये सत्यखण्डनीयंखण्डनमैकमत्ये तु सङ्कलनमविकलं; सुधावदधिकं सुधीजनमनोरञ्जनमवलोकितुं प्रयतेरन् प्रायशः प्रत्ना नूत्ना अपि सन्तः प्रशंसन्तः सौष्ठवमेतदीयमिति,

किं चात्रत्येषु दिक्परिमितेषूल्लासेषु क्रमेण समुचितनिरूपणमेषामिति संक्षेपतऊह्यं, तद् यथा—१मे—काव्यलक्षणस्य तद्भेदानां च, २ये—शब्दार्थस्वरूपनिरूपणात्मकेऽभिधाऽऽदीनाम्, ३ये—अर्थव्यञ्जकतायाः, ४ र्थे—ध्वनेः, ५मे—ध्वनिगुणीभूतव्यङ्ग्यस्य व्यञ्जनास्थापनप्रभृतेश्च, ६ष्ठे—चित्राख्यकाव्यभेदस्य, ७मे—दोषाणाम्, ८मे—गुणानाम्, ९मे—शब्दालङ्काराणाम्, १०मे—अर्थालङ्काराणामिति ।

उक्तचरविषयमवलम्ब्य यादृशी विचारशैली प्रदर्शिता टीकाकारमहोदयैर्ग्रन्थकृदाशयवर्णनपुरःसरं तत्सर्वं भवत्पुरःसरमेव प्रकटीभविष्यतीत्यलं पल्लवितेन विज्ञवरेष्विति ।

मूल्यम्—रू० ५)

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः

मैथिलश्रोत्रियपण्डितश्रीबदरीनाथशर्मनिर्मितदीधितिविवृतिविलसितः ।

## प्रथम उद्द्योतः ।

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।**

ध्वनिवृत्तिकर्तृवाणीं, विषमां व्याख्यातुमुद्यतः सहसा ।
प्रयतः प्रणम्य वाणीं, करुणावरुणालयस्वान्ताम् ॥ १ ॥
महसाऽऽलिङ्गितमनिशं किमपि तमश्चारु चिन्तयन् कुतुकात् ।
रचयति बदरीनाथो ध्वन्यालोकस्य दीधितिं विवृतिम् ॥ २ ॥

अथ परमप्रशस्तपथाध्वनीनं ध्वनिनिबन्धं व्याचिख्यासुर्विदग्धविद्वच्चूडामणिस्तत्रभवान् राजानकानन्दवर्धनाचार्यः शिष्टाचारपरम्पराऽनुशिष्टं प्रारिप्सितप्रबन्धसमाप्तिप्रचारप्रतिबन्धकप्रत्यूहव्यूहमपोहयितुमाशीर्वादात्मकं मङ्गलं विधाय शिष्यशिक्षायै निबध्नाति—**स्वेच्छेति** । स्वेच्छया निजनैसर्गिकजगदवनसमीहया, यदृच्छया वा, न तु कृतकर्मवशेन परादेशेन वा, केसरिणः—सिंहस्य; मधुरिपोर्नारायणस्य नृहरेरितियावत् । स्वच्छया—अवदातया, स्वेषाम्—आत्मनाम्, छायया—कान्त्या, आयासितः साम्यासादनप्रयत्नं कारितः खेदितो, वा; इन्दुश्चन्द्रमा यैस्तादृशाः । प्रपन्नानां—शरणागतानां प्रह्लादप्रभृतीनाम् । अर्तिच्छिदः—पीडाहारिणः । नखाः, वो—युष्मान् व्याख्यातॄन् श्रोतॄंश्च, त्रायन्तां रक्षन्त्वित्यर्थः ।

तथाहि—'स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरिता चेति ते समाः' इति केशवः । 'छायात्वनातपे कान्तौ' इति वैजयन्ती । 'आयासो यत्नः क्लेशश्च' इति कल्पद्रुमः । 'चापाग्रपीडयोरर्तिः' इति शाश्वतश्च ।

त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥

इह स्वेच्छाशब्दस्य विलक्षणैकार्थोपस्थापकत्वात् 'निजस्वात्मादिशब्दानां प्रधानक्रियाकर्त्रन्वयित्वम्' इति व्युत्पत्तिविरोधप्रयोज्यो नैवाभवन्मतयोगो दोषः। आतपाभाववाचित्व एव छायाशब्दस्य समासे "छाया बाहुल्ये" इति पाणिनिसूत्रेण क्लीबत्वस्य व्याख्यातृभिः सिद्धान्तिततवान्न 'स्वच्छाये'त्यत्र तत्प्राप्तिः। सवर्णदीर्घेण स्वरूपाविपर्यासेऽपि प्रकृते क्लीबत्वमङ्गीकर्तुमसङ्गतम्, 'स्वच्छायया' इत्याचार्यव्याख्यानानुपपत्तेः। स्वच्छशब्दस्य धर्मिवाचकत्वेऽप्युक्तरीत्याऽन्वयसामञ्जस्ये धर्मपरताकल्पनं तु कस्यचिच्चिन्त्यम्। त्राणं च प्रकृतोपयोगितया ग्रन्थसमाप्तिप्रचारप्रतिभटप्रत्यवायशान्तिलक्षणं साहाय्याचरणम्। अतो नासङ्गतिः। भगवतः स्वेच्छाकेसरिता प्राकृतसिंहापेक्षिकं व्यतिरेकमलङ्कारम्, स्वाच्छन्दं द्वारीकृत्य परानियोज्यत्वेन परमैश्वर्यञ्च, मधुरिपुपदं खलनिग्राहकतां विक्रमविशेषञ्च, स पुनः प्रपन्नत्राणौचित्यम्, नखच्छायायाः स्वच्छता शशाङ्ककान्त्यपेक्षया वैलक्षण्यम्, तच्च तदासादनार्थमायासविधानोपपत्तिम्, इन्दुपदं स्वीययावत्सुषमासाम्राज्यशालित्वम्, तस्यापि साम्यासादनायासो नखानां शोभातिरेकस्यासौलभ्यमुखेन स्पृहणीयताम्, बहुत्वं प्रत्येकमपि त्राणसामर्थ्येऽनेकसद्भावे तदवश्यम्भावम्, एकाकिचन्द्रावधिकाधिक्यलाभस्येषत्करत्वं च, प्रपन्नत्वमुपेक्षानर्हताम्, अर्तित्वं झटित्युच्छेद्यताम्, क्विप्प्रत्ययस्तच्छेदे नखानां नित्योद्यमम्, स च भगवतो विपक्षोच्छेदोत्साहद्वारकं वीररसम्, नखानां छिदाकर्तृत्वमायुधान्तरापरिग्रहौचितीम्, तीक्ष्णतां च, सा तु रक्षादाक्ष्यम्, समस्तवाक्यार्थो भगवन्नृसिंहविषयककविनिष्ठरतिभावं च सूचयति। इत्थञ्च वस्त्वलङ्काररसादिलक्षणत्रिरूपोऽपि ध्वनिरिह स्फुटोऽवगन्तव्यः। **'प्रपन्नार्तिच्छिदः'** इतिविशेषणस्य साभिप्रायत्वेन परिकरोऽत्रालङ्कारः श्रुतिवृत्तिच्छेकानुप्रासैः संसृज्यते।

यत्त्वत्र 'पूर्वमेक एवासाधारणवैशद्यहृद्याकारयोगात् समस्तजनाभिलषणीयताभाजनमभवम्, अद्य पुनरेवंविधा नखा दश बालचन्द्राकाराः सन्तापार्तिच्छेदकुशलाश्चेति तानेव लोको बालेन्दुबहुमानेन पश्यति, न तु मामित्याकलयन् बालेन्दुरविरतमायासमनुभवतीत्युत्प्रेक्षाऽपन्हुतिध्वनिरपि' इति केचन व्याचक्षते। तत्र तदीयमहत्त्वमनुसन्दधतो वयं परमुदास्महे। तथाहि—प्रतीयमानाऽप्युत्प्रेक्षाऽपन्हुतिश्च तदैवात्र स्वीकर्तुं शक्येते, यदि प्रकृतधर्मिकाप्रकृतसम्भावनायाः, प्रकृतनिराकृतिपुर-

# संस्कृतानुरागियों के लिए अपूर्व अवसर

## महामहोपाध्याय मथुराप्रसाद दीक्षित

कृत

### संस्कृत साहित्य के अपूर्व ग्रन्थरत्न

**भारत-विजय-नाटकम्**— यह प्राचीन कवियों के सदृश नाटकीय नियमों का पालन करते हुए ऐतिहासिक तथा राजनीतिक नाटक बीसवीं सदी में अपूर्व है। इसमे भारत मे अंग्रेजों के आगमन, उनके अन्याय से भारतव्यापार का नाश, अँगूठे काटना, बेगमो पर कोड़े लगाकर आभूषण उतारना, खजाना लूटना आदि दृश्यों का तथा कूटनीति से देशीराज्यों का अन्त करना आदि का अपूर्व रीति से दृश्य वर्णन है।

१८५७ का स्वातन्त्र्य युद्ध, झाँसी रानी की वीरता और अन्त में कांग्रेस के स्वातन्त्र्य युद्ध से पराजित होकर महात्मा गाँधी जी के हाथों में भारत को विभक्तकर शासन सौंप कर चले जाने का अपूर्व दृश्य है। इसके पढ़ते हुये किस भारतीय का हृदय शौर्य से ओत प्रोत न हो जायगा, एवं किसके हृदय में स्वदेश प्रेम की लहरें न उठने लगेंगी, विदेशियों के शासन से किस के मन में घृणा न हो जायगी।

इस रचना में सब से अधिक महत्त्व का विषय यह है कि दीक्षित जी ने अपनी अभूतपूर्व नीति-कुशलता से अंग्रेजों की गतिविधि समझकर आज से दश वर्ष पूर्व ही देश को विभक्त कर इनका यहाँ से १९४८ में प्रयाण करना जनता के सामने रख दिया था, १९४६ के कांग्रेस शिक्षामन्त्री के पत्र साथ में छपे हैं, दीक्षित जी की यह भविष्य-दर्शिता आज भी महर्षियों के अस्तित्व का ज्वलन्त प्रमाण है, अतः संस्कृतानुरागियों के लिये यह परमोपादेय है। अतएव इसके गुणों में आकृष्ट बोर्ड के विद्वानों ने उत्तरप्रदेश संस्कृत-प्रथमा में एवम् पञ्जाब संस्कृत-बोर्ड के विद्वानों ने प्राज्ञ-परीक्षा में इसे नियत कर दिया है।

मूल्य २॥) हिन्दी अनुवादसहित

२—**शङ्कर-विजय नाटक**—इसमें मण्डनमिश्र का शास्त्रार्थ, मीमांसा, वेदान्त, जैन, बौद्ध, चार्वाक, कापालिक आदि दर्शनों का तात्त्विक वर्णन है जिससे प्रत्येक दर्शन का ठोस एवं पूर्ण परिज्ञान हो जाता है।

मूल्य १) मात्र

३—**भक्तसुदर्शन नाटक**—यह देवी भागवत से ऐतिहासिक नाटक लिखा गया है। रामचन्द्र जी के पूर्वज सुदर्शन की भक्ति, तल्लीनता, 'दुर्गा' देवी के मन्त्र का प्रभाव, दुर्गादेवी का प्रगट होकर युद्ध में शत्रु को मारकर सुदर्शन—अयोध्या-

नरेश की रक्षा करना आदि अपूर्व दृश्य है, उसी दुर्गादेवी का मन्दिर देवी जी के आदेश से बनारस के दक्षिण प्रान्त में दुर्गाकुण्ड पर स्थापित है, समय-समय पर तिरङ्गे आठ चित्र दिखाये गये हैं। मूल्य ३॥) मात्र

४ - पाणिनीय-सिद्धान्त-कौमुदी—यह भट्टोजि दीक्षित जी की कौमुदी के सदृश है, सूत्रार्थ का ही नाम वृत्ति है अतः सूत्र से ही सूत्रार्थ प्रतीत हो जाने के कारण उसकी वृत्ति नहीं दी गई। छोटी अर्थबोधिकामात्र कहीं-कहीं वृत्ति है, फक्किका एवम् प्रत्युदाहरण सर्वथा हटा दिये गये हैं। अतएव भट्टोजि दीक्षित की कौमुदी से कलेवर में आधी से भी कम है। पाणिनि जी का कोई भी सूत्र छोड़ा नहीं गया है। केवल डेढ़ दो वर्ष में कण्ठस्थ हो सकती है।

"कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः" पुस्तक मँगाने की शीघ्रता कीजिये अन्यथा द्वितीयावृत्ति की प्रतीक्षा करनी होगी।

५—पृथ्वीराजरासो-हिन्दी अनुवादसहित, प्रथम समय, इसमें विशेषता यह है कि फोटो से ली गयी प्राचीन लिपि के सहारे से यह समय लिखा गया है, उसमें प्रक्षेपादि दोष नहीं है, शुद्ध, प्रक्षेपरहित केवल दोसौ पन्द्रह छन्द हैं। जब कि नागरीप्रचारिणी बनारस, एसियाटिक सुसाइटी कलकत्ता से संपादित केवल प्रथम समय में ९०० नौ से अधिक हैं। कहां कहां प्रक्षेप, किन-किन कारणों से, किस-किस छन्द का है इत्यादि विवेचना पूर्वक हिन्दी अनुवाद सहित समस्त रासो को दीक्षित जी लिख रहे हैं। मूल्य १) मात्र

६—सरस्वती-एकाङ्की नाटक, पं० सदाशिव दीक्षित विरचित। यदि देशभक्ति-भावना से ओत-प्रोत कोमल-कान्त पदावली का रसास्वादन करना चाहते हैं, यदि आप राष्ट्रिय गीतों की निसर्ग मधुर छटा देखना चाहते हैं, यदि आप जावा, सुमात्रा, बोर्नियो आदि सुदूर पूर्व देशों में व्याप्त संस्कृत भाषा के वैभव से अभिनन्दित होना चाहते हैं, यदि आप अमेरिका आदि देशों में भारतीय संस्कृति के भग्नावशिष्ट चिह्नों का दर्शन करना चाहते हैं, यदि आप वर्तमान विज्ञान के रेडियो, टेलीवीजन, आर्टफीशियल इनसेमिनेशन (कृत्रिम गर्भधारण) आदि आविष्कारों की प्रतिष्ठा प्राचीन पुस्तकों में प्राप्त करना चाहते हैं और यदि संस्कृत साहित्य में पूर्णतया अनुपलब्ध पद्यमय एकाङ्की नाटक का अध्ययन करना चाहते हैं तो शीघ्रातिशीघ्र पुस्तक मँगाकर लाभ उठाइये। मूल्य १) मात्र

**पता— मोतीलाल बनारसीदास**
**नैपाली खपरा, पोस्टबक्स नं० ७५ बनारस**

# भूमिका

सुर-सरस्वती की अपेक्षा प्राकृत की प्राचीनता अथवा अर्वाचीनता-संबन्धी विवाद से असंपृक्त रह कर हम यह दृढता पूर्वक कह सकते हैं कि समुच्चारण सौकय इसकी समुत्पत्ति का—समुन्नति का—प्रधान कारण है। एक श्रावक के प्रश्न के उत्तर में श्रीहरिभद्र सूरि जी महाराज का कथन है कि

बाल-स्त्री-वृद्ध-मूर्खाणां नृणां चारित्रकांक्षिणाम्।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः॥

लोक-व्यवहार विषयक अनुभूति से भी उपर्य्युक्त सिद्धान्त का ह समर्थन होता है। अपठित परिवार के व्यक्ति, विशेषतः बालक औ वृद्ध कुछ अक्षरों का उच्चारण सुगमता पूर्वक नहीं करते। उदाहरणाथ उष्ट्र, हस्त, मस्तक, युधिष्ठिर आदि संयुक्ताक्षर समन्वित शब्दों क उच्चारण वह विकृत रूप में ही उट्ट (ऊँट), हत्थ (हाथ), मत्थग (माथ) जुधिट्ठिल (युधिष्ठिर) आदि के रूप में ही कर सकेंगे। उन्ह इन शब्दों का परिज्ञान तो अवश्य है, पर शुद्ध रूप में उनके उच्चारण करने में वे पूर्णतया असमर्थ हैं। भिन्न भिन्न देशों में भी अक्षर उच्चारण प्रणाली भिन्न भिन्न है। अतः यह निःसङ्कोच कहा जासकत है कि प्रान्तीय अथवा देशीय भाषाओं की उत्पत्ति में इस उच्चारण क भी एक महत्त्वपूर्ण स्थान है।

पाली, प्राकृत आदि भाषाओं के विवेचक वैयाकरणों ने संस्कृ साहित्य के समान २ हजार धातुओं का परिगणन तथा प्रकृति औ प्रत्यय का वैज्ञानिक विश्लेषण न करके केवल परिणमन (रूपान्तर पद्धति की प्रक्रिया प्रदर्शित की है, जिसके फल स्वरूप आज भी प्राकृ का अध्ययन संस्कृत माध्यम से ही किया जाता है। 'शेषं संस्कृता इस सूत्र के निर्देश से भी उन्होंने उपर्युक्त मत की ही परिपुष्टि की है।

कालचक्र के प्रभाव से यह भाषा आज संस्कृतज्ञों के लिये भी इतनी दुरूह बन गई है कि संस्कृतच्छाया के विना इसकी गाथाओं के अर्थानुसन्धान के लिये वे अपने को पूर्णतया असमर्थ पाते हैं, जिसका प्रधान कारण प्रचलित पाठन-पद्धति है। पूज्य पिता जी ने ( महामहोपाध्याय राजगुरु, पण्डित श्री मथुराप्रसाद दीक्षित जी ने ) इस सूत्र-सप्तति के-केवल ७० सूत्रों के-अनुगमन से जिस प्रणाली का निर्देश किया है, उससे सुगमतया अल्पकाल में ही इस प्राकृत भाषा में अपने साधारण भावों की अभिव्यक्ति करने की योग्यता उपलब्ध हो जा सकती है। इस भाषा के गद्य अथवा पद्य के अर्थानुसन्धान के लिये संस्कृतच्छाया के अवलम्ब की आवश्यकता न रह जायगी।

प्राचीन तथा अर्वाचीन अनेक नाटकों के—स्वप्नवासवदत्ता, रत्नावली नाटिका, शकुन्तला, मुद्राराक्षस, उत्तररामचरित, वेणीसंहार, भारत-विजय के तथा दशवैकालिक, आवश्यकसूत्र, भगवतीसूत्र आदि जैनागमों के अनेक अवतरणों को उद्धृत कर तथा उनमें प्रयुक्त सम्पूर्ण शब्दों का साधुत्व इस सूत्र-सप्तति से दरशाकर प्राकृत भाषा का अध्ययन तथा अध्यापन कितना सुगम बना दिया गया है—इसके लिये प्रमाण प्रदर्शन की आवश्यकता नहीं। प्रथमा के अतिरिक्त किसी अन्य विभक्ति का निरूपण भी इस लिये नहीं किया गया है कि शब्दार्थ के परिज्ञान हो जाने के अनन्तर विभक्त्यर्थ-कारक चिह्नों का परिज्ञान स्वतः हो जाता है। जैसे राजपुरुष, देशबन्धु आदि समस्त पदों में षष्ठ्यर्थसूचक संबन्ध की 'के' इस कारक चिह्न की प्रतीति इसके ( अर्थात् 'के' इस कारक चिह्न के ) अभाव में भी जिस प्रकार हो जाती है, उसी प्रकार शब्दों के अर्थानुसन्धान हो जाने पर प्रयुक्त कारकचिह्नों का परिज्ञान स्वतः हो जायगा।

इस प्राकृत-प्रदीप को अपना कर यदि पण्डित-मण्डली ने अपनी प्रोत्साहनमयी सहृदयता का परिचय दिया तो हम ( म. म. मथुरा प्रसाद-दीक्षित ) शीघ्र ही संस्कृत के उस लघुतम व्याकरण को लेकर

आपकी सेवा में उपस्थित होने का प्रयत्न करेंगे जिसके द्वारा संस्कृत का परिज्ञान अल्प ही काल में हो जायगा। इस पद्धति के आधार पर विना रटे, प्रतिदिन केवल एक घंटे के परिशीलन से संस्कृतजिज्ञासु इतना परिज्ञान तो तीन मास के भीतर ही प्राप्त कर सकेगा जिसके बल पर वह साधारण काव्य, पुराण आदि का अर्थ समझकर, एवं साधारण संस्कृत में अपने भावों की अभिव्यक्ति कर संस्कृतसमुत्थान में सहयोग दे सके।

सरस्वती सदन
१-१-५४

सदाशिव दीक्षित



# पा० प्रा० व्याकरण—सूत्रसूची

## अथ प्रथमोऽध्यायः

१ कगचजतदपयवां प्रायो लोपः ।
२ अघो मनयाम् ।
३ सर्वत्र लवराम् ।
४ शेषादेशयोर्द्वित्वमनादौ ।
५ शषोः सः ।
६ नो णः सर्वत्र ।
७ वर्गेषु युजः पूर्वः ।
८ उपरि लोपः कगडतपषशसाम् ।
९ खघथधभां हः नानुस्वारादिति वाच्यम् ।
१० अदातो यथादिषु वा ।
युक्तेऽनुस्वारे च नित्यमिति वाच्यम् ।
११ सन्धौ अज्लोपविशेषा बहुलम् ।
१२ ऋतोऽत् ।
१३ इदृष्यादिषु ।
१४ उदृत्वादिषु ।
१५ पो वः ।
१६ टो डः ।
१७ त्य थ्य द्यां च छ जाः ।
१८ अद्यादिषु छः ।
१९ ष्क स्क क्षां खः ।
२० आदेर्यो जः ।
२१ र्य शय्याऽभिमन्युषु जः ।
२२ ध्यह्ययोर्झः ।
२३ श्चत्सप्सां छः ।
२४ ऋत्वादिषु तो दः ।
२५ हरिद्रादीनां रो लः ।
क्वचिद् डकारस्यापीति वाच्यम् ।
२६ क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्स्वरवत्पूर्वस्य ।
२७ इत् ह्री श्री क्रीतक्रान्तक्लेशम्लानस्वप्नस्पर्शादर्शहर्षार्हेषु ।
२८ क्वचिदन्यत्रापि ।
२९ ह्रस्नष्णश्नां ण्हः ।
३० ह्ल श्ल ह्मेषु णलमां स्थितिरूर्ध्वम् ।
३१ इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाङ्गारेषु ।
३२ अनादावयुजोस्तथयोर्दधौ ।
३२ प्रथमद्वितीययोस्तृतीयचतुर्थौ ।
३३ म्रज्ञयोर्णाः ।
३४ ष्मपद्मविस्मयेषु म्हः ।

इति श्री म० म० मथुराप्रसादकृते पालीप्राकृतव्याकरणे प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः

अन्मुकुटादिषु ।
२ आ समृद्ध्यादिषु ।

३ इदीतः पानीयादिषु ।
४ उदूतो मधूकादिषु ।
५ उत्सौन्दर्यादिषु ।
६ इत एत् पिण्डसमेषु ।
७ ऐत एत् ।
८ ए शय्यादिषु ।
९ औत ओत् ।
१० उत ओत्तुण्डसमेषु ।
११ ऋ रीति ।
१२ ष्टस्य ठः ।
टस्य ढोऽपि वाच्यः ।
१३ स्तस्य थः ।
१४ स्पस्य फः ।
१५ र्तस्य टः ।
१६ न धूर्तादिषु ।
१७ दशादिषु हः ।
१८ संख्यायाश्च ( रः ) ।
१९ उत्तरीयातीययोर्यो ज्जो वा ।
२० चौर्यसमेषु रियः ।
२१ वक्रादिष्वनुस्वारः ।
२२ मांसादिषु वा ।
२३ नीडादिषु द्वित्वम् ।
२४ पौरादिष्व उत् ।
२५ अवर्णो यः श्रुतिः ।
२६ वसतिभस्तयोर्हः ।
२७ प्रतिसरवेतसपताकासु डः ।
२८ इतेस्तः पदादेः ।
२९ इत्पुरुषे रोः ।
३० युक्ते ओत उत् आदीदूतां ह्रस्वश्च ।
३१ अत ओत्सोः ।
३२ स्त्रियामात् ।
३३ नपुंसके सोर्बिन्दुः ।
३४ अन्त्यस्य हलो लुपिः ।
३५ लुभिसुप्सु दीर्घः ।
३६ क्त्वा तूण इयौ ।

इति म० म० मथुराप्रसादकृते पा० प्रा० व्याकरणे द्वितीयोऽध्यायः ।

## समाप्तोऽयं ग्रन्थः ।



# पालीप्राकृत-व्याकरणम्



यत्त्वत्पादसरोरुहेण जयितां स्वान्ते प्रवालोऽदधान्
मन्ये तन्नितरामसौ जड़( ल )मतिर्बालः प्रकृष्टो भृशम् ।
यन्नीत्वा लघुपल्लवः पदलवं साम्याय संकल्पते
क्षुद्रोऽसो लवमात्रतो न समता नैतद्यतो बुध्यते ॥१॥
बौद्ध-जैनागमान्दृष्ट्वा तेषां व्याकरणान्यपि ।
पाली-प्राकृत-बोधाय लघुव्याकरणं ब्रुवे ॥ २ ॥
धात्वादेशनिपातानां तथा सुप्तिङ्विधेरपि ।
वाक्यैकदेशयातत्वात्सुज्ञत्वान्नैव दर्शये ॥ ३ ॥

**क-ग-च-ज-त-द-प-य-वां प्रायो लोपः ॥१॥ १ ॥** एषां प्रायो लोपः स्यात् ( कस्य ) वउलो । वराई । गोउलं । चोरओ । तारिआ । मासिअं । रसिओ । सअलो । संवाहओ । हंसओ । ( गस्य ) साअरो । उरओ । छाओ । जाअरा । पराओ । रोओ । ( चस्य ) सुइरं ।

---

हिन्दी । समस्तबौद्धागम और जैनागमों को एवम् उनके व्याकरणों को अर्थात् पाली व्याकरण तथा प्राकृत व्याकरणों को देखकर पाली और प्राकृत के बोध के लिये संक्षिप्त और सरल "पाली-प्राकृत-व्याकरण" को कहता हूं । धातु के स्थान मे जायमान आदेश, निपात और सुप्तिङ्विधि, को नहीं कहूंगा क्योंकि स्वयं इन की प्रतीति हो जाती है ।

कगेति । क-ग-च-ज-त-द-प-य-व-इनका प्रायः लोप होता है । प्रायः पद के ग्रहण से कहीं २ नहीं भी होता है । लक्ष्यानुसार व्यवस्था करनी चाहिये, यदि दो वर्णों का लोप प्राप्त हो तो सुखद प्रतीयमान होने से उत्तर वर्ण का लोप होगा।

सूई। परिअरो। रुइरो। मरीई। लोओ। वाआलो। ( जस्य ) गिरिआ। कुंभओ। मुरओ। राआ। मरुओ। सहओ। संदेहअं। (तस्य) असई। सुरअं। चउरो। पराजिओ। सुओ। रोहिओ। माउलो। (दस्य) गआ। कअली। खइरो। सआ। दुरोअरो। (पस्य) विउलं। चअलो। वउसो। ( यस्य ) वाऊ, काओ, गांगेओ, तुरीओ, विजओ, हओ। ( वस्य ) जीओ, जओ, देओ, कितओ, कअलो, विराओ।

---

पूर्व वर्ण का नहीं, जैसे विजयः का विजओ होगा, जकार का लोप नहीं होगा। एवं किंचुलकः का किंचुलओ, परिचयः का परिचओ। कहीं दोनों का होगा, जैसे-राजिका-राइआ। प्रयोजनम्-पओअणं। यह दोनो वर्णों का लोप अत्यन्त काचित्क है।

ककारलोप के उदाहरण, वकुलः, वराकी, गोकुलम्, चोरकः, तारिका, मासिकम्, रसिकः, सकलः, संवाहकः, हंसकः। इत्यादिकों मे ककार का लोप करने से उक्त प्रयोग होते हैं। गकार के सागरः, उरगः, छागः, जागरा, परागः, रोगः। चकार के—सुचिरः, सूची, परिचरः, रुचिरः, मरीचिः, लोचः, वाचालः।

जकार के—गिरिजा, कुम्भजः, मुरजः, राजा, मरुजः, सहजः, संदेहजम्। तकार के—असती, सुरतम्, चतुरः, पराजितः, सुतः, रोहितः, मातुलः। दकार के—गदा, कदली, खदिरः, सदा, दुरोदरः। पकार के—विपुलम्, चपलः, वपुः। इत्यादिकों मे पकार का लोप जानना, परन्तु पकार को 'पो वः' इस वक्ष्यमाण १५-पन्द्रह नंबर के सूत्र से वकार भी होता है। परन्तु कहाँ लोप करना और कहाँ वकारादेश करना यह सब लक्ष्यानुसार प्रचलित प्रयुक्त शब्दों को देख कर व्यवस्था करनी चाहिये।

यकार के—वायुः, कायः, गांगेयः, तुरीयः, विजयः, हयः। वकार के—जीवः, जवः, कितवः, कवलः, विरावः।

अनादि मे विद्यमान ही ककारादिकों का लोप होगा। जैसे—कालः, दासः, पुराणम्। यहां ककार, दकार, पकार का लोप नहीं होगा, क्योंकि उक्त वर्ण आदि मे विद्यमान हैं। चतुर्थ सूत्र से आदि का अपकर्ष करना।

अनादावेवेति वाच्यम् । तेनेह न । कालो, दासो, पुराणं ।

**अधो मनयाम्** ।१।२। वर्णान्तरस्य अधः स्थितानां मकार-नकार-यकाराणां लोपः स्यात् । छद्मं । रस्सी । तिग्गं । (नस्य) लग्गो । भग्गो । मग्गो । भुग्गो । ( यस्य ) मन्ना । वन्ना । तुल्लो ।

---

यह ककारादिकों के लोप करने पर यदि अकार अथवा आकार होगा तो उसको वक्ष्यमाण "अवर्णो यः श्रुतिः" इस ( २ + २५ ) सूत्र से यकार हो जायगा । परन्तु यह यकार आदेश मागधी, अर्धमागधी मे होगा, क्योकि जैनागमों में प्राय. यकार का प्रयोग मिलता है, परन्तु नाटक में नहीं । मेरे मत से सौकर्य-प्रतीति से नाटकों में भी करना चाहिए । प्राचीन कालिक नाटकों मे शौरसेनी का प्राधान्य है अतः स्त्री आदि की उक्ति मे अकार को यकारादेश नहीं है । परन्तु जैनागमों मे प्रायः यकार ही है । जैसे—भगवती सूत्रागम—

"वियसिय अरविन्दकरा णासियतिमिरा सुहासिया देवी ।
मज्झं पि देउ मेहं बुह—विबुह—णमंसिया णिच्चं ।

यहां विकसित, नासित, सुखासिता, नमंसितादिक शब्दों मे ककार तकार के लोप के अनन्तर अवशिष्ट अकार को यकार होता है । एवम् । "चम्पाणाम णयरी होत्था" यहां भी 'नगरी' शब्द के गकार लोप के अनन्तर अवशिष्ट 'अ' को 'य' होता है । दश वैकालिक जैनागम-गोचरीप्रकरण—ण य पुप्फं किलामेइ सो य पीणाइ अप्पयं । यहां-न च, स च, आत्मकम्, मे चकार, ककार लोप के अनन्तर यकार होता है ।

अध इति—संयुक्त वर्ण के अधोभाग मे स्थित मकार-नकार-यकार का लोप हो । जैसे-छद्मम्, रश्मिः, तिग्मम् । कोई आचार्य—"क्वचिदन्यत्रापि" ( २८ ) इस अट्ठाइसवे सूत्र से वर्णविश्लेष और तत्स्वरयुक्तता करके जाल्म का जालम, विक्लवः का विपलवो, सुक्लः का सुकलो, सूक्ष्म का सूक्षम इत्यादि मानते हैं । परन्तु प्राकृतमहाकाव्यादिकों मे ऐसे प्रयोग नहीं मिलते । आधुनिक प्रचलित भाषा के परिज्ञान के लिए यह प्रकार माना जा सकता है । अस्तु ।

नकार के— लग्नः, भग्नः, मग्नः, भुग्नः, इत्यादि मे अधःस्थित नकार का लोप होता है । यकार के—मन्या, वन्या, तुल्यः इत्यादिकों मे यकार का लोप होता है ।

**सर्वत्र लवराम् ।१।३।** वर्णान्तरस्य उपरि अधो वा स्थितानां लकार-वकार-रेफाणां लोपः स्यात् । (लस्य उपरिस्थस्य) संकप्पो। विकप्पो। उक्का। उम्मुओ। कप्पिओ। कम्मासो। कुम्मासो। गुम्मो। वक्कलं। (अधःस्थस्य लस्य) उवप्पुओ। अम्मिआ। अम्माणं। विक्कओ। सुक्किओ। पवो। पवंगमो। (वस्य) ईसरो। जित्तरो। गह्वरो। विह्लो। उल्लणो। वीसासो। पक्को। (ऊर्ध्वस्थस्य वस्य) कुज्जो। लुद्धओ। सद्दो। लद्धो। वीसद्धो। छुद्धो। अद्धी। (ऊर्ध्वस्य रस्य) उम्मिओ। धुत्तो। सुप्पो। मुहुत्तो। विसज्जिओ। अद्दिओ। मद्दिओ। दप्पो। किण्णो। (अधस्थस्य रस्य) पुत्तो। पत्तिआ। विप्पो। चित्तिओ। दलिद्दो। नक्को। रुद्दो। इंदो। इंदिअं।

---

"सर्वत्रेति" यदि संयुक्त वर्ण के ऊपर अथवा अधःस्थित लकार-वकार-रेफ होगा तो उसका लोप हो जायगा और अवशिष्ट वर्ण को वक्ष्यमाण चतुर्थ सूत्र से द्वित्व हो जायगा। जैसे—ऊर्ध्वस्थित लकार का उदाहरण—संकल्पः, विकल्पः, उल्का, उल्मुकः, कल्पितः, कल्माषः—चितकवरारंग। अर्थात् जिसमें दो तीन रंग हो। कुल्माषः—धान्यविशेष। गुल्मः, वल्कलम्। अधःस्थित लकार जैसे—उपप्लुतः, अम्लिका, अम्लानः—वनस्पतिविशेष। विक्लवः, शुक्लितः, प्लवः, प्लवंगमः, विक्लवः, क्लिबः। वकार के। जैसे—ईश्वरः, जित्वरः, गह्वरः, विह्वलः। 'नरहोरिति वाच्यम्' इससे हकार को द्वित्व नहीं होगा। उल्वणः, विश्वासः, पक्वः।

ऊर्ध्वस्थ वकार के उदाहरण जैसे—कुब्जः, लुब्धकः, शब्दः, लब्धः। विश्रब्धः, क्षुब्धः अब्धिः। यहां वकार से पवर्गीय अन्तस्थ दोनों का ग्रहण करना, क्योंकि उदाहरण उसी प्रकार से मिलते हैं, जैसे लुब्धकः, अब्धिः इत्यादिकों में पवर्गीय बकार है, ईश्वरः जित्वरः इत्यादिकों में प्रत्ययसंबन्धी होने से अन्तस्थ वकार है, क्योंकि—"उदूठौ यस्य विद्येते यो वा प्रत्ययसन्धिजः। अन्तस्थं तं विजानीयात वर्ग्यमाहुरतः परम्" अथवा वकार बकार का सावर्ण्य मानकर दोनों का ग्रहण करना ऊर्ध्वस्थ रकार के—ऊर्मयः, धूर्तः, शूर्पः, मुहूर्तः, विसर्जितः, अर्दितः, मर्दितः, दर्पः कीर्णः। अधः स्थित रेफके—पुत्रः, पत्रिका, विप्रः, चित्रितः, दरिद्रः, नक्रः, रुद्रः, इन्द्रः इन्द्रियम्। वकार से विषय में संदेहास्पद होने से व्युत्क्रम से उदाहरण दिये हैं

**शेषादेशयोर्द्वित्वमनादौ ।१।४।** लोपादवशिष्टस्य शेषरूपस्य, आदेशरूपस्य च वर्णस्य द्वित्वं स्यात् न त्वादौ। शेषस्य-धम्मो सप्पो। विप्पो। लग्गो। मग्गो। उक्का। विप्पश्रो। आदेशस्य यथा-पच्छिमो। वच्छो। उच्छाहो। लिच्छा। जुगुच्छा। अनादाविति किम्। चवणो, धश्रो। आदेशस्य थवश्रो, झाणं, खीणो। इत्यादि। संयुक्तस्यैव आदेशे द्वित्वम्। उत्तरीयानीययोर्यो ज्जो वा' इत्यत्र द्वित्वजकारविधानाज् ज्ञापकात्तेन

---

शेषा इति। लोप से अवशिष्ट वर्ण को तथा आदेश से जायमान वर्ण को द्वित्व हो। आदि मे स्थित शेष वर्ण को तथा आदिस्थित आदेशज वर्ण को द्वित्व नहीं हो। शेष वर्ण के उदाहरण—धर्मः, सर्पः, विप्रः। लग्नः, मग्नः, उल्का, विप्लवः, इत्यादि में पूर्वोक्त 'सर्वत्र लवराम्' इससे रेफ लकार के लोप करने के अनन्तर अवशिष्ट वर्णों को द्वित्व हुआ। आदेश के उदाहरण-पश्चिमः, वत्सः, उत्साहः, लिप्सा, जुगुप्सा, इत्यादिकों में 'श्चत्सप्सां छः ।२३।' इस वक्ष्यमाण सूत्र से छकार करने के अनन्तर आदेशभूत छकार को द्वित्व हो जायगा, फिर 'वर्गेषु युजः पूर्वः'।७। इससे पूर्व छकार को चकार। यह लोप द्वित्वादि पाली प्राकृत मे समान है, परन्तु 'कगचज०' इस प्रथम सूत्र से जो लोप होता है, वह पाली मे कहीं नहीं होता है। जहां आदि में शेष या आदेश वर्ण होगा वहाँ द्वित्व नहीं होगा, जैसे—च्यवनः, ध्वजः। यकार वकार लोप करने अनन्तर चकार-धकार को द्वित्व नहीं होगा। आदेश के—स्तवकः, ध्यानम्, क्षीणम्' यहां, 'स्त' को थकार, 'ध्य' को झकार, 'क्ष' को खकार करने के अनन्तर द्वित्व नहीं होगा, क्योंकि आदि मे ये आदेशज वर्ण हैं।

यह आदेश-जहां संयुक्त वर्ण के स्थान मे कोई वर्ण हुआ होगा वहीं द्वित्व होगा, क्योंकि 'उत्तरीयानीययोर्यो ज्जो वा'। इस सूत्र मे द्वित्व 'ज्ज' के विधान से जानते हैं कि संयुक्त वर्ण के आदेश मे ही द्वित्व होगा। अन्यथा केवल जकार विधान करते और फिर इससे द्वित्व हो जाता। फल—हरिद्रादि मे र को लकार

---

नोट—(१) स्तस्य थः। ३+१३। (२) ध्यह्ययोर्झः। २२। (३) क्स्क्ष्वां खः। १६।

हलिद्दा इत्यादौ न द्वित्वम् । नरहोरिति वाच्यम् । रेफहकारयोर्न द्वित्वम् । गहरः । विहलः ।

**शषोः सः ।१।५।** शकार-षकारयोः सः स्यात् । ससओ, अस्सो, अस्समो, सद्दो, अंसो । दस । सरीरं । रासिं । सअं । सक्का । पदेसो । ( षस्य ) सेसो, मेसो, कसाअं । सुसिरं । विसओ, मासो, पारिसदो, पीऊसो, धिसणा । इसू । पासाणो ।

**नो णः सर्वत्र ।१।६।** सर्वत्र नकारस्य णकारः स्यात् । घणो, णअणं, वअणं, कणअं, णई, णूणं, माणुसो, धुणी । सणातणो आणंदणो, विणओ । चलणं, विणीओ । "अयमादौ क्वचिन्न भवति" नेरइआ, नलओ, नत्ता, नाडिआ, नालोबंधो । नासिआ, नीहारो, नेत्तं । नूतणो नारओ । "वर्णान्तरेणायुक्तस्येति वाच्यम्" तेनेह न । अन्तरा, कन्दरा, बन्धुरा । कन्दुओ । चन्दणं । छन्दो । मन्दिरं । मन्दुरा । स्वेन युक्तस्य तु

---

करने पर द्वित्व नहीं होगा । हलिद्दा इत्यादि । रेफ हकार को द्वित्व नहीं होगा । गह्वरः, विह्वलः । इत्यादि पूर्व में कह आये हैं ।

शषोरिति । शकार षकार को सकार हो । शशकः, अश्वः, आश्रमः, शब्दः, अंशः, दश, शरीरम्, राशिम्, शतम्, शक्या, प्रदेशः इत्यादिकों मे शकार को सकार होगा, और उक्त सूत्रों से ककार-वकार-रेफ-यकार का लोप होगा । एवम्—षकार के—शेषः, मेषः, कषायम्, शुषिरम्, विषयः, माषः, पारिषदः, पीयूषः, धिषणा, इषुः, पाषाणः, इत्यादिकों मे शकार-षकार को सकार होगा । यह भी पाली प्राकृत मे समान सकारादेश करता है ।

नो णः इति । नकार को णकार हो । घनः, नयनम्, वचनम्, कनकम्, नदी, नूनम्, मानुषः, धुनिः, सनातनः, आनन्दनः, विनयः, चलनम्, विनीतः, यहां सर्वत्र नकार को णकार हुआ और पूर्वोक्त सूत्र से ककार यकार चकारादि का लोप तथा ष को स होगा । यह नकार को णकार, कहीं २ आदिस्थ नकार के स्थान पर नहीं भी होता है । जैसे—नैरयिकः, नलकः, नप्ता, नाडिका, नालीबन्धः, नासिका, नीहारः, नेत्रम्, नूतनः, नारकः । इत्यादि मे सुखोच्चार-

णत्वं भवत्येव। उण्णअं, अण्णं, कण्णा। तुण्णवाओ, सण्णद्धं, पण्णओ।

**वर्गेषु युजः पूर्वः ।१।७।** कवर्गादिषु वर्गेषु युजः—द्वितीयचतुर्थयोः पूर्वः प्रथमतृतीयः स्यात्। कचटतपाः पञ्च वर्गाः। तत्र क ख ग घ ङाः, इति पञ्च कवर्गे। एवं चवर्गादिष्वपि पञ्च २ बोध्याः। तद्यथा। मुक्खो, वग्घो, मुच्छिओ, गुणड्ढो, (१) पत्थिओ, अद्धओ, गुज्फो, अब्भासो। आदेशे-पूर्वोक्ता एव। पच्छिमो, वच्छो, उच्छाहो, लिच्छा, जुगुच्छा। एवमन्यत्रापि। णक्खत्तं। पक्खेओ, पक्खमूलं, णिक्खेवो,

---

णानुकू..., तथा व्यवहृत आगमोक्तशब्दानुकूल कल्पना कर लेना।

वर्णान्तरेणेति, यह नकार को णकार दूसरे वर्ण से संयुक्त होने पर नहीं होगा, जैसे—अन्तरा, कन्दरा, बन्धुरा, कन्दुकः, चन्दनम्, छन्दः, मन्दिरं, मन्दुरा, स्व से युक्त होने पर, अर्थात् नकार का नकार से योग होने पर णकार हो जायगा। जैसे—उन्नतम्, अन्यत्, कन्या, तुन्नवायः, सन्नद्धम्, पन्नगः। वर्गेष्विति—कवर्गादिक वर्गों में युक्त वर्ण का अर्थात् द्वितीय एवं चतुर्थ वर्ण का स्व से योग होने पर पूर्व वर्ण होगा, तात्पर्य यह कि ख-ख का योग होने पर क होगा, जैसे मूर्ख शब्द में रेफ लोप होने पर अवशिष्ट ख को द्वित्व, फिर युक्त 'ख' का पूर्व वर्ण ककार हो जायगा। एवं घ का पूर्व वर्ण 'ग' होगा, एवं 'छ' का च, 'ढ' का ड। 'थ' का 'त', 'ध' का 'द', इसी तरह सर्वत्र जानना। जैसे—मूर्खः, मे क, व्याघ्रः, रेफ लोप, घकार द्वित्व। 'घ' को ग। मूर्छितः, छद्वित्व, छको चकार। एवम् गुणाढ्यः, पार्थिवः, अध्वगः, गुल्फः, अभ्यासः। आदेश मे पूर्वोक्त उदाहरणों को ही जानना। पश्चिमः, वत्सः, उत्साहः, लिप्सा, जुगुप्सा,। इसी प्रकार अन्य आदेशों में भी जानना। नक्षत्रं, प्रक्षेपः, पक्षमूलं, निक्षेपः, राक्षसः, शुष्कम्, पुष्करः, रुष्टः, तुष्टः, परिभ्रष्टः, विस्वस्तः, प्रस्थितः,। इत्यादिकों में, नं० (४+

---

नोट—तुन्नवायस्तु सौचिकः। अमरः। अधो मनयाम् २। सर्वत्र लवराम् ३। भत्सप्सां छः ।१।२३। ष्कस्कक्षां खः ।१।२६। ष्टस्य ठः ।१३। स्तस्य थः ।२।१३। पूर्वः इत्यावृत्य पूर्वः पूर्वः स्यादित्यर्थः, तेन प्रथमस्य ककारादयः, न तूत्तरस्य।

रक्खसो। सुक्खं, पुक्खरो, रुट्ठो, तुट्ठो, परिब्भट्ठो, वीसत्थो, पत्थिओ, एवमादेशान्तरेष्वप्यूह्यम्।

**उपरि लोपः क ग ड त द प ष ( १ ) श साम्।१।८।** उपरिस्थितानामेषां लोपः स्यात्। भत्तं, भुत्तं, सित्थं, विवित्तं, रित्तं। सित्थअं, ( गस्य ) दुद्धं, मुद्धो, जद्धं, संदिद्धं, सिणिद्धो ( डस्य ) खग्गो, छग्गुणो, विग्गहिलो, रुज्जओ, छद्धा। ( तस्य ) उप्फुल्लं, उप्पलं उप्पाओ, तप्पिआ, उप्पएणो, ( दस्य ) मुग्गरो, मुग्गलो। पग्गओ, ( पस्य ) सुत्तो, गुत्तं, लुत्तो, लित्तं, छुत्तं। ( षस्य ) सुक्कं,, दुक्कला, चउक्कं, विक्कंभो, विट्ठा। मुक्को। ( शस्य ) णिच्छिद्दो। णिच्छंदो ( सस्य ) खलिअं, णेहः। अप्फालिअं। कत्थूरी, थविरो, थूणा, थूलो, थिरो, फुरणा, फुरियं। ष्कस्य स्कष्कत्वामिति खकारोऽपि।

**खघथधभां हः।१।६।** एषां हकारः स्यात्। (खस्य) मुहं, मेहला,

---

३+२३+१६+) नं० ( २अ० १२+१३+) से आदेश होने पर द्वित्व पूर्ववर्ण होगा।

उपरीति। किसी व्यञ्जन वर्ण के ऊपर मे विद्यमान क-ग-ड-त-द-प-ष-श-स इनका लोप हो। उदाहरण—(ककार) भक्तम्, भुक्तम्, सिक्थम्, विविक्तम्, रिक्तम्, सिक्थकम्। ( गकार ) दुग्धम्, मुग्धः, जग्धम्, संदिग्धम्, स्निग्धम्, ( डकार ) खड्गः, षड्गुणः, विड्ग्रहिलः, रुड्जयः, षड्धा। ( तकार ) उत्फुल्लम्, उत्पलम्, उत्पातः, तत्पिता। ( दकार ) मुद्गरः, मुद्गलः, पद्गतः। (पकार) सुप्तः, गुप्तः, लुप्तः, लिप्तम्, क्षुप्तम्। ( षकार ) शुष्कम्, दुष्कला, चतुष्कम्, विष्कम्भः, विष्ठा, मुष्कः। ( शकार ) निश्छिद्रः, निश्छन्दः। ( सकार ) स्खलितम्, स्नेहः, आस्फालितम्, कस्तूरी, स्थविरः, स्थूणा, स्थूलो, स्थिरः, स्फुरणा, स्फुरितम्? इत्यादिकों मे ककारादिकों के लोप होने पर शेष वर्ण को द्वित्व और द्वितीय को प्रथम, चतुर्थ को तृतीय होगा। परन्तु थविर, थूणा, थिरो, इत्यादि मे आदिभूत को द्वित्व नहीं होगा। यह लोप, द्वित्व, पूर्ववर्ण होना पालीप्राकृत मे समान है।

खघेति। ख-घ-थ-ध-भ-इन को हकार हो। ख के उदाहरण—मुखम्,

परिहा, णहरो, मुहरो, सही, सेहरो, महो, साहा, णहो। (घस्य) मेहो णिदाहो, जहणं, अहं, जिहस्सू। दुहणो, परिहो, णिहसो, अमोहो, सरहा, अवहणो। इत्यादि। थकारस्य—सवहो, कहा, मिहुणो, मिहिला, महिओ, रहगुत्ति, तिही, तहागओ, सारही। धकारस्य—रुहिरो, गोहिआ, गोहा, विहुवणं, णिहाणं, महुरो, णिही, साहू, सेवही, विहू, दही, अगाहं, जलहरो, महू। भकारस्य—णहो, सोहा, विहावरी, अहिलसिओ, अहिलासा, अहीरो, गद्दहो, डिंडुहो, पहूओ, पहाविओ, सुहं, विहवो। इत्यादिः—

नानुस्वारात्संयोगाच्चेति वाच्यम्। अनुस्वारात्परेषामेषां न हकारः। संखो, लंघणं, मंथरा, बंधुरो, किंफलो, कुंभो। णिग्घिणो, णिक्खेपो। मण्डूकप्लुत्या प्रायः पदानुवृत्तेः आदौ तु क्वचिदपि न। खग्गो, खुरो, खइरो,

---

मेखला, परिखा, नखरः, मुखरः, सखी, शेखरः, मखः, शाखा, नखः। (घकार) के मेघः, निदाघः, जघनम्, अघम्, जिघत्सुः, द्रुघणः, (२) परिघः, निघसः, अमोघः, सरघा, अपघनः,। थकार के—शपथः। कथा, मिथुनः, मिथिला, मथितः, रथगुप्तिः, तिथिः, तथागतः, सारथिः, धकार के उदाहरण-रुधिरः, गोधिका, गोधा, १ विधुवनम्, निधानम्, मधुरः, निधिः, साधुः, सेवधिः, विधुः, दधि, अगाधम्, जलधरः, मधु। भकार के उदाहरण—नभः, शोभा, विभावरी, अभिलषितः, अभिलाषा, आभीरः, गर्दभः, डुण्डुभः, प्रभूतः, प्रभावितः, शुभम्, विभवः, इत्यादिकों मे तत् तत् वर्ण को हकार हुआ है। यह इन वर्णों को हकारादेश 'पाली' मे नहीं होता है।

नानुस्वारादिति। अनुस्वार से और संयोग से परे इनको हकारादेश नहीं होता है, जैसे-शंखः, लङ्घनम्, मन्थरा, बन्धुरः, किंफलः, कुम्भः। निर्घृणः, निक्षेपः। 'कगचज' सूत्रोक्त।१।१। प्रायः पदकी मण्डूकप्लुति से अनुवृत्ति करके यह मानना कि आदि मे विद्यमान खकारादिकों को हकार कहीं नहीं होगा, और अनादि मे भी कहीं २ नहीं होगा। आदि मे जैसे—खड्गः, खुरः, खदिरः, खलः

---

नोट—१।८। आदेशात्पूर्वमेव सकारस्यैव लोपे सर्वप्रयोगसिद्धौ पुस्तकान्तरे शकारो नेति बोध्यम्। द्रुघण—मुद्गर। २ परिघ—अस्त्रविशेष। निघस-निगलकर खाने योग्य।

खलो । घड़ो, घणो, थिरो, थविरो । धीरो, धम्मो, धणिओ । भाणू, भालो । भीसणो । अनादावपि क्वचिन्न । अधमो, अभओ । इत्यादि । सुखोच्चारणानुकूलाद् व्यवस्था कार्या ।

**अदातो यथादिषु वा । १ । १० ।** यथादिशब्देषु आदौ अनादौ वा वर्तमानस्य आतः अत् वा स्यात् । जह, जहा । तह, तहा, । पवहो, पवाहो । पहरो, पहारो । पअअं, पाअअं । परिआओ, पारिआओ । चमरं, चामरं । उक्खओ, उक्खाओ । हलिओ, हालिओ । 'वाग्रहणस्य व्यवस्थितविभाषितत्वात् क्वचिन्नित्यम् । ठविओ' इत्यादि । युक्तेऽनुस्वारे च नित्यमिति वक्तव्यम् । संयुक्ते वर्णे परतोऽनुस्वारे च पूर्वस्य नित्यं

---

घटः, घनः, स्थिरः, स्थविरः, धीरः, धर्म्मः, धनिकः, भानुः, भालः, भीषणः, । इत्यादि मे हकार नहीं हुआ, कहीं अन्यत्र अनादि मे जैसे—अखण्डः, अधमः, अभयः इत्यादि । यहां भी समास से पूर्व में आदि ही है ।

अदातो इति । यथादिक शब्दों के आदि अथवा अनादि मे विद्यमान आकार को अकार विकल्प से हो, जैसे—यथा—(नं० १।२०) से यकार को जकार उक्त सूत्र से हकार, विकल्प से इससे अकार होने पर । जह, जहा । एवं तथा के तह, तहा रूप होंगे । प्रवाहः, प्रहारः, प्राकृतं, प्रस्तारः ( २।१३ ) से स्त को थकार, अन्य कार्य पूर्वोक्त सूत्रों से जानना । पारिजातः, चामरम् । उत्खातः, 'यद्यपि अनुपदोक्त—( पास मे पूर्वोक्त ) सूत्रों से बहुलांश मे प्रयोग सिद्ध होते हैं, फिर भी सुखावबोधार्थ साधुत्व दिखायेंगे । नं० । ८ से तलोप । ४ से द्वित्व, ७ से ककार । १ से तलोप । एवम्, हालिकः । सूत्रोक्त वा ग्रहण व्यवस्थित विकल्पार्थक है, तो कहीं नित्य ह्रस्व होगा, जैसे ठविओ । स्थापितः । स्थ को ठ आदेश । नं० १५ से 'प' को व । १ से 'त' लोप । नित्य ह्रस्व । ठविओ ।

संयुक्त वर्ण परे रहते, और अनुस्वार के योग मे नित्य ह्रस्व हो । प्रासः,

---

नोट—'कोटिरस्याटनी गोधा, तले ज्याघातवारणे' अमरः । किंफलः—'काफल' इति शिमला प्रान्ते । नं० २० आदेर्यो जः नं० १२ अतोत् से अकार 'क' । 'कगचज' से लोप, परन्तु 'उद्दत्वादिषु से उकार करके 'पाउड' मानते हैं । २ + १२ स्तस्य थः ।

ह्रस्वः स्यात् । पत्तो, पुव्वो, पुव्वण्हो, अवरण्हो, बम्हणो, कज्जो, गुणड्ढो, धुत्तो, अस्समो, इस्सरो, उवज्झाओ, मुल्लं, रक्खसो, ऊम्मिआ, रत्ती, चुण्णं, तिव्वो, बम्हीलिवी, इत्यादि । अनुस्वारे—कंतो, कंचणं, लंछणं, लंगूलं, मंसो, पंसू, संजत्तिओ, संसइओ । इत्यादि (२+३०) सूत्रेण ह्रस्वे सिद्धे सुखावबोधार्थं युक्तग्रहणम्

**सन्धावचामज्लोपविशेषा बहुलम् ।१।११।** सन्धौ कर्तव्ये अचां स्थाने अज्विशेषा, लोपविशेषाश्च स्युः। बहुलग्रहणादन्यच्च स्यात् । वासेसी

---

पूर्वः, पूर्वाह्णः । अपराह्णः । नं० २६ से ह्न को ण्ह । उभयत्र नित्य ह्रस्व ।ब्राह्मणः । नं० ३० से म्ह आदेश, नित्य ह्रस्व । कार्यः । नं० २१ से जकार । आदेशस्वरूप होने से द्वित्व । संयुक्ताक्षर परे है अतः नित्य ह्रस्व । धूर्तः, आश्रमः, ईश्वरः ! उपाध्यायः । नं० २२ से 'ध्य' को झ आदेश, द्वित्व, जकार, नित्य ह्रस्व । उवज्झाओ । मूल्यम् । राक्षसः । नं० १६ से क्ष को ख । ४ से द्वित्व । ७ से ककार। संयुक्त पर होने से नित्य ह्रस्व । रक्खसो । ऊर्मिका । रात्रिः । चूर्णम् । तीव्रः । ब्राह्मीलिपिः । नं० ३० से ह्म को म्ह । संयुक्त पर होने से नित्य ह्रस्व । नं० १५ से 'प' को 'व'। बम्हीलिवी । अन्य कार्य पूर्ववत् । अनुस्वार मे—कांतः, कांचनं, लांछनम्, लाङ्गूलम्, नित्य पर सवर्ण होने से संयुक्त परत्व है, परन्तु प्राकृत मे अनुस्वार होगा । अथवा—मांसः, पांशुः, सांयात्रिकः, सांशयिकः । इत्यादिक मे अनुस्वार परक होने से ह्रस्व हुआ ।

सन्धाविति । अचों की परस्पर सन्धिकर्तव्य रहते अच् के स्थान मे कहीं अज् विशेष कहीं लोप, कहीं द्वितीय अच् के विना, व्यञ्जन से योग होने पर भी

---

नोट (८) उपरि लोपः क ग ड त द प ष श साम् । (४) शेषादेशयोर्द्वित्वमनादौ । (१) क ग च ज त द ० (१५) पो वः । (२६) ह्नश्नष्ण-ष्ण ह्नां ण्हः । (३०) । ह्म ह्न ह्मेषु नलमां स्थितिरूर्ध्वम् । (२१) र्यशय्याऽभिमन्युषु जः । (२२) ध्यह्ययोर्झः । (१६) ष्कस्कक्षां खः (७) वर्गेषु युजः पूर्वः ॥

वासइसी । राएसी, राअइसी । कण्णोरो, कण्णऊरो । कुंभारो, कुम्भआरो । अन्धारो, अन्धआरो । तबवि, तवावि । ममवि, ममावि । केणवि, केणावि । राउलं, राअउलं । तुहद्धं, तुहअद्धं । महद्धं, मह-अद्धं । पापडणं, पाअपडअं । गंगोदगं, गंगाउदगं । क्वचिद्दीर्घविकल्पोऽपि बाहुलकादवसीयते" वारीमई, वारिमई । वईमूलं, वइमूलं । वेणूवणं, वेणुवणं । केलीकला, केलिकला । तरीपवाहो, तरिपवाहो । थुई वाओ, थुइवाओ । गिरीगमणं, गिरिगमणं । भाणूरोहो, भाणुरोहो । साणूगओ, साणुगओ । साहूसमागमो, साहुसमागमो । क्वचिद् विकल्पेन ह्रस्वोऽपि । जउणातडं, जउणातडं । णइसोतो, णईसोतो । बहुमुहं, बहूमुहं । लालपडणं, लालापडणं । दूइहत्थो, दूईहत्थो । चामिअरं, चामीअरं । जंबुणदं, जंबूणदं । इत्यादिकं महाकविप्रयोगानुसृतेः, शुभप्रतीतेर्लोकव्यवहाराच्च स्वयं कल्पनीयम् ।

---

अच् को आदेश भिन्नस्वरूप दीर्घादि हो । व्यास ऋषिः, नं० ( १३ ) से ऋ को इकार । इससे विकल्प से अ इ मिलकर एकार, नं० ( २ ) से य लोप ( ५ ) से सकार वासेसी, पक्ष मे वास इसी । एवम्—राजर्षिः के उक्त प्रयोग होंगे, कर्णपूरः । चक्रवाकः, कुम्भकारः । अन्धकारः, तव अपि मम अपि, केन अपि, राजकुलम्, राअ उलं । तुह अद्धं । मह अद्धं । पादपतनम्—पाअपडणं, गंगा उदकम् इत्यादिकों के उक्त प्रयोग सिद्ध होवे है । नं० ( १ )+६+२+१३+३+५+४+से कार्य करने से प्राकृत स्वरूप होता है ।

कहीं पर बहुलग्रहण से विकल्प से दीर्घ जानना । जैसे—वारि-मती, रि' की इकार को विकल्प से दीर्घ हो जायगा, वारीमई, पक्ष में वारिमई । नं० १ से त लोप । एवम्—वृति मूलम् मे नं० ( १२ ) से अकार । दीर्घविकल्प ।

---

नोट—नं० ( १३ ) इदृष्यादिषु । ( २ ) अधो मनयाम् । ( ५ ) शषोः सः । ( १ ) कगचजतदपयवां प्रायो लोपः । ( ३ ) सर्वत्र लवराम् । ( १२ ) ऋतोऽत् । ( ६ ) नो णः सर्वत्र । ( ६ ) खघथधभां हः । ( २० ) आदेर्योजः । ( १६ ) टो डः । ( १३ ) स्तस्य थः । ( ४ ) शेषादेशयोर्द्वित्वमनादौ । ( ३२ ) प्रथमद्वितीययोस्तृतीयचतुर्थौ ।

क्वचिदोकारस्य अत्वमपि—सिरवेअणा, सिरोवेअणा। सररुहं, सरोरुहं। मणहरं, मणोहरं। क्वचिन्नैवौकारस्य अत्वम्। मणोरहो, मणोहवो।

क्वचित् पूर्वपदान्तस्थस्य अकारस्य वा लोपः। राउलं, राअउलं। पापीढं, पाअपीढं। पालग्गो, पाअलग्गो। क्वचिद् हल्परस्यापि अचो नित्यमादिलोपः। तुम्हे एत्थ, तुम्हेत्थ। पूर्वपदस्थस्य–राइंदो। गइंदो। मइंदो। उविंदो। इंदोपो। दीवुज्जलो। मअरंदुज्जाणं। पमदुज्जाणं। महूसवो। क्वचिन्नित्यमिकारलोपः। तुहत्ति, महत्ति। गओत्ति, दइओत्ति। क्वचिद् यष्टिशब्दस्य वा लकारलोपः। चम्मट्ठी, चम्मलट्ठी। धम्मट्ठी,

---

वईमूलं। वेणुवनम्। केलिकला। तरिप्रवाहः, स्तुतिवादः, गिरिगमनम्, भानुरोषः, सानुगतः, साधुसमागमः। दीर्घविकल्प के अतिरिक्त ( नं० ६+४+६ ) से तत्तत्कार्य जानना।

कहीं पर विकल्प से ह्रस्व भी होता है। जैसे—यमुना तटम्, मे आकार को विकल्प से ह्रस्व करने पर, जउणतडं, पक्ष मे जउणातडं। नं० २०×६+१६ +४+६+२+१३+ से प्रयोगोक्त अन्यकार्य जानना। नदी स्रोतः, बधूमुखम्, लालापतनम्, दूतीहस्तः, चामीकरम्, जम्बूनदम्। इत्यादि में विकल्प से ह्रस्व हुआ है। यह ह्रस्व दीर्घ व्यवस्था प्राकृत प्रयोक्ता महाकवियों के प्रयोग से, सुखप्रतीयमान उच्चारण से तथा लोक व्यवहार से स्वयं कर लेना चाहिये।

बहुल ग्रहण से कहीं ओकार को अकार भी होता है। शिरोवेदना। सरोरुहम्, मनोहरम्। कहीं पर ओकार को अकार नहीं होता है। मनोरथः, मनोभवः। यहां ओकार को अकार नहीं होगा। कहीं पर पूर्वपदान्तस्थ अकार का विकल्प से लोप होगा। जैसे—राजकुल का राउलं, राअउलं। एवं पादपीठं के पापीढं, पाअपीढं। पादलग्नः। कहीं हल् परे रहते भी आदिस्थ अच् का नित्य

---

नोट—( ५ ) शषोः सः ( १ ) कगचजतदपयवां प्रायो लोपः। (६) नोणः सर्वत्र। ( ६ ) खघथधभां हः। ( २+१२ ) ठस्य ढोपि वक्तव्यः। ( २ ) अधोमनयाम्। ( १२ ) ऋतोऽत्। ( २+१६ ) दशादिषु हः ( १७ ) संख्यायाश्च। ( ३ ) सर्वत्र लवराम्। — इन सूत्रों से उक्त प्रयोग सिद्ध होंगे।

धम्मलट्ठी। क्वचिद्ग्रहणान्नेह । असिलट्ठी। बहुलग्रहणात् क्वचित्सन्धिरेव न भवति। मुहअंदो, परिअरो, उवआरो । पईवो, दुराआरो विआलो। क्वचित्सस्य लोपे ओत्वम् । परोप्परं। क्वचिद् एत्वम्, अन्तेउरं तेरह। तेवीसा। तेत्तीसा । क्वचिदेकस्मिन् पदेऽप्योत्वम् । पुणोपुणा। सर्वमपीदं महाकविप्रयोगात् प्रचलितप्रयोगाच्चावगन्तव्यम्। सर्वमपीदं यथायथं परावर्तयितुं विधातुं च शक्यते।

---

लोप होता है। तुम्हे एत्थ आदिस्थ एकार का लोप। तुम्हे त्थ। कहीं अच् के परे नित्य अच् का लोप। राजेन्द्रः, राज इन्द्रः। रा इन्द्रो। गजेन्द्र, गअइंदो। गइंदो मृगेन्द्रः, मअइंदो। मइंदो। उपेन्द्रः, इन्द्रगोपः। दीपोज्ज्वल, मकरंदोद्यानम्, प्रमदोद्यानम्, मधूत्सवः, राजेन्द्रादि शब्दों में अकार का लोप, मधूत्सव में उकार का। कहीं पर इकार का नित्य लोप हो। तुह इति। मह इति। गत इति। दयित इति। इतेस्तः पदादेः ( २+२८ )। इससे इकार को तकार हो जाने से तुह इति का तुहत्ति, मह इति का महत्ति इत्यादि में सर्वत्र तकार हो जायगा फिर तकारादेश के लिये इष्टि मानना निष्प्रयोजन है। कहीं पर यष्टि शब्द के लकार का विकल्प से लोप हो। चर्मयष्टिः, धर्मयष्टिः। बहुलग्रहण से कहीं लोप नहीं होगा। असियष्टिः। प्रायः संयुक्त वर्ण पूर्व रहते लकार का लोप होगा। कहीं सन्धि प्रयुक्त कुछ भी नहीं होगा। मुखचन्द्रः, परिकरः, उपकारः, प्रदीपः, दुराचारः, विकालः। कहीं सकार का लोप ओत्व होगा। परस्परम्। कहीं पर एकार। अन्तःपुरम्। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्। कहीं पर एक पद में भी ओकार। पुनः पुनः। यह सन्धिसंबन्धी भिन्न तरह का कार्य महाकवियों के प्रयोग से तथा प्रचलित प्रयोगों से जानना। प्राकृत प्रयोगों को देखकर कार्य की कल्पना कर वर्णागम वर्णविकार वर्ण लोप आदि की कल्पना कर लेना चाहिये। इसी तात्पर्य को लेकर—

बहुल पद का निर्वचन करते हुये पूर्वाचार्यों ने कहा है कि—जिस सूत्र मे बहुल पद पड़ा हो उसकी कहीं प्रवृत्ति हो और कहीं अप्रवृत्ति हो, कहीं विकल्प से उस सूत्रोक्त कार्य हों और कहीं अन्य ही प्रकार के कार्य हों। इस प्रकार विधि के अनेक प्रकार के आगम आदेशादि को देखकर चार प्रकार के बहुल पद प्रयुक्त

